


# BIBLIOTHECA INDICA

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL
NEW SERIES, No. 1098



# शतदूषणी ।

# ÇATADŪSANĪ

BY

ÇRĪMAN NIGAMANTA MAHĀ DEÇIKA,

WITH THE

COMMENTARY ENTITLED CANDAMĀRUTA

BY

ÇRĪMAN-MAHĀ-CĀRYA.

EDITED BY

The Honourable P. Anandacharlu Vidyāvinod, Viçārada, Rai Bahadur, C.I.E., &c.

VOL. I. FASCICULUS II

CALCUTTA
PRINTED AT THE BAPTIST MISSION PRESS
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET
1904

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

No 57, PARK STREET CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS MR BERNARD QUARITCH,

15 PICCADILLY, LONDON W, AND MR OTTO

HARRASSOWITZ BOOKSELLER LEIPZIG GERMANY

*Complete cop es of those wo ks m rked wit an aste isk * cannot be supplied—some of the Fasc culi being out of stock*

BIBLIOTHECA INDICA.

*Sanskrit Series*

| | | | |
|---|---|---|---|
| Advaita Brahma S ddhi (Text Fasc 1-4 @ /6/ each | Rs | 1 | 8 |
| Advaitach nta Kaustubha Fasc 1-2 | | 0 | 12 |
| *Agni Purana (Text) Fasc 4-14 @ /6/ each | | 4 | 2 |
| Aitareya Brahmana, Vol I Fasc 1 5 and Vol II Fasc. 1 5; Vol III Fasc 1-5 Vol IV F sc 1 5 @ /6 | | 7 | 8 |
| Anu Bhasyam (Text) Fasc 2 5 @ 6 each | | 1 | 8 |
| Aphor sms of Sand lya Engl sh Fasc 1 | | 0 | 12 |
| Astasahasr ka Prajnaparamita (Text Fasc 1 6 @ /6/ each | | 2 | 4 |
| *Asvava dyaka* Text Fasc 1 5 @ /6 each | | 1 | 14 |
| Avadana Kalpalata (Sans and Tibetan) Vol I Fasc 2 5 Vol II Fasc 1 5 @ 1/ each | | 9 | 0 |
| Bala Bhott Vol I Fasc 1 | | 0 | 6 |
| Bandhayana Srauta Sutra Fasc 1 2 @ /6/ each | | 0 | 12 |
| *Bhamati (Text Fasc 4 8 @ 6 each | | 1 | 14 |
| Bhatta D p ka Vol I Fasc 1 4 | | 1 | 8 |
| Brhaddevata (Text) Fasc 1 4 @ /6 each | | 1 | 8 |
| Brhaddharma Purana (Text) Fasc 1 6 @ /6/ each | | 2 | 4 |
| Bodhicaryavatara of Ca t deva Fasc 1 2 | | 0 | 12 |
| Catadusan Fasc. 1 | | 0 | 6 |
| Catalogue of Sanskr t Books and MSS F sc 1-4 @ 2/ each | | 8 | 0 |
| Çatapatha Brahmana Vol I Fasc 1 7; Vol III Fasc 1-4 | | 4 | 2 |
| Çatasahasr ka prajnaparamita (Text) Part I Fasc. 1 7 @ /6/ each | | 2 | 10 |
| *Caturvarga Ch ntaman Text Vols II 1 25 III Part I Fasc 1 18 Part II Fasc 1 10 @ /6 each; Vol IV Fasc 1 | | 20 | 4 |
| Çlokavart ka (Engl sh Fasc 1-4 | | 3 | 0 |
| *Çrauta Sutra of Apastamba (Text Fasc 4 17 @ /6 each | | 5 | 4 |
| D tto Çankhayana (Text Vol I Fasc 1 ; Vol II Fasc 1-4 Vol III Fasc 1-4 @ /6/ each Vol 4 Fasc 1 | | 6 | 0 |
| Çr Bhashyam (Text) Fasc 1 3 @ /6/ each | | 1 | 2 |
| Dan Kr ya Kaumud Fasc 1 2 | | 0 | 12 |
| Gadadhara Paddhat Kalasara Vol I Fasc 1-6 | | 2 | 4 |
| Kala Madhava (Text Fasc 1-4 @ /6/ each | | 1 | 8 |
| Kala Viveka Fasc 1 6 | | 2 | 4 |
| Katantra Text) Fasc 1 6 @ /12/ each | | 4 | 8 |
| Katha Sarit Sagara Engl sh Fasc 1 14 @ /12 each | | 10 | 8 |
| K rma Purana Text Fasc 1 9 @ /6/ each | | 3 | 6 |
| Lal ta V stara (Engl sh) Fasc 1 3 @ /12/ each | | 2 | 4 |
| Madana Par jata (Text Fasc 1-11 @ /6/ each | | 4 | 2 |
| Mai a bhasya prad pôdyôta (Text) Fasc 1 9 & Vol II Fasc 1 11 @ /6/ each | | 7 | 8 |
| Manut ka Sangraha (Text) Fasc 1 3 @ /6/ each | | 1 | 2 |
| Markandeya Purana (English) Fasc 1 8 @ /12 each | | 6 | 0 |
| —sa Darçana (Text Fasc 7 19 @ /6/ each | | 4 | 14 |
| (Text Fasc 1-6 @ /6 | | 2 | 4 |
| ext Vol III Fasc 1 6 Vol IV Fasc 1-8 @ 6/ each | | 5 | 4 |
| ddhati Fasc 1 7 (Text) @ /6/ | | 2 | 10 |
| ad ph Fasc 1-4 | | 1 | 8 |
| Nyayab nd ka Text) | | 0 | 10 |
| Nyaya Kusum anjali Prakarana (Text Vol I Fasc 1 6 Vol II Fasc 1 8 @ /6/ each | | 2 | 6 |




हरिः ओम् ।

श्रीमते हयग्रीवपरब्रह्मणे नमः ।

श्रीमते भगवद्रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# शतदूषणी ।

---

## ब्रह्मशब्दवृत्त्यनुपपत्तिवादः प्रथमः ।

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥
समाहारस्साम्नां प्रतिपदमृचां धाम यजुषां
लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।
कथादर्पक्षुभ्यत्कलि कथककोलाहलभवं
हरत्वन्तर्ध्वान्तं हयवदनहेषा हलहलः ॥
दुर्दम्यममगाथक्कुमतिजालकूलंकषा
दुरापमतविषानलज्वलितजीवजीवातवः ।
चरन्त्यधृतमत्सर यतिपुरन्दरस्योक्तय
श्चिरन्तनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः ॥

प्राचीमुपेत्यपदवीं यतिराजदृ(जु)ष्टां
तत्स्विदिष्टमपि वा ( यत्किञ्चिदन्यदपि वा ) मतमाश्रयन्तः ।
प्राज्ञा यथोदितमिदं शृणुतस्यटन्तः
प्रच्छन्नबौद्धविजये परितोषयतध्वम् ॥
वादाहवेषु निर्भेत्तुं वेदमार्गविदूषकान् ।
प्रयुज्यतां शरश्रेणी निशिताशतदूषणी ॥

तत्र तावच्छास्त्रारम्भे, विचारविषयत्वेन सूत्रकारद्-सूचयत् । परीक्षा ब्रह्मशब्दस्य वृत्तिरत्र निरस्यते ॥ निर्विशेष ब्रह्मवादे ब्रह्मशब्दस्य कचिन्मुख्य(वृत्त)त्वमस्ति न वा, नचेदसाधुत्वापत्तिः, साधुत्वस्य मिथ्यात्वमभ्युपगच्छतामसाधुत्वमिष्टमिति चेत्, हन्त तर्हि सर्वशब्दासाधुत्वम्, साध्वसाधुविवेकाभावे च हतं साङ्गोपाङ्गैर्वेदैः, मुख्यार्थशून्यस्य तन्मूलवृत्त्यन्तरे लिङ्गत्वेचासम्भवति कथं कचिद्-बोधकत्वमपि, न च साङ्केतिकोऽयमपभ्रंशो वा, येन वाचकत्वाभिमानाद्बोधकत्वं स्यात्, यस्त्वायमपभ्रंशशङ्कयेन सोऽपि तथा वृत्तिविकल्पेन निर्धूयेत, ननु ब्रह्मशब्दस्यायं महिमा, यन्मुख्यार्थविरहेऽपि नित्यं लक्षणया ब्रह्म बोधयतीति, तदिदं वन्ध्यायाः पौत्रदर्शनम्, मुख्यार्थसंबन्धिन्यमुख्ये वृत्तिर्हि लक्षणा, तदभावेऽपि तद्वृत्तिं भवानेव भाषेत, किञ्चैवमुख्यार्थशून्यास्सर्वे शब्दास्तमर्थं लक्षयन्तीति स्वौक्तिवेत महामीमांसकेन, कोहिलदुरन्यायवित्कुत्रापि शक्तिक्लृप्तिगौरवमभ्युपेयात्, मुख्यार्थशून्येन ब्रह्म लक्ष्यमितिवदता

वत्; अस्तु व्यावहारिकत्वादेशिष्यम्; कथन्तर्हि शुद्धे वृत्तिः; तदपि तद्द्वारा(गाधत)गम्यत इति चेत्; तर्हि तदुपस्थितमुख्यम्, उपस्थितमुख्यमिति पक्षस्तु श्रुतिसिद्धस्वाभाविकभावंस्याद्युपहित (येत) त्वविवक्षायां स्वमतविरोधादपास्तः, स्वाभिमताज्ञानादिदोषोपहितत्वस्वनावमलैङ्गमश्रौतमघार्तमपोक्षेति स्थापयिष्यते, तत्र च शुद्धे परे ब्रह्मणि निर्दोषमव्यगुणविशिष्टविषयभगवच्छब्दमुख्यवृत्तिनिवृत्तिविरोधः, "परम्ब्रह्मपरन्धामपवित्रं परमं भवानि" ति स्तुत्यनुपपत्तिः, पवित्रं परममित्यादिसमभिव्याहारवैयर्थ्यं (घर्थ्यं) च। निर्विशेषलक्षणायान्तु स्तुति र्न कथञ्चिदपि सम्भवति; गुणवच्छिन्न गुणाभिधानरूपत्वात्तस्या इति, पूर्वापरादिविसंवादाच्च न कुत्रापि निर्गुणसिद्धिः, अपि चाविद्यानिवृत्त्यर्थमिह ज्ञातव्यमुपहितं निरुपाधिकं वा; आद्ये तत्त्वावेदकतटस्थस्वरूपलक्षणादिभिरपि तद्ग्रहणाद्विशिष्टब्रह्मणिवृत्त्यप्रसिद्ध्याद्यदिष्टसिद्धिरस्यात्, व्याघातत्त्वज्ञानादेव मोक्षसिद्धिः, तस्य मिथ्यात्वेनैव युष्माभिरङ्गीकारात्; द्वितीये त्वतद्गुणत्वेन तद्(कवृत्त्य)प्रयोग एव, तस्माल्लक्षितत्वज्जिज्ञास्यते लक्ष्यते शोध्यते चेति चेत्, तत एव निर्विशेषलक्षकब्रह्मशब्दाद् ज्ञातत्वलक्षितत्वशोधितत्वसिद्धा जिज्ञासाद्यनपेक्षा स्यात्; न च जिज्ञासादौ विधिः, अदृष्टार्थलाभावात्; येन पिष्टपेषणं सहेम, निरुपाधिके ब्रह्मशब्दवृत्तिमविदुषः प्रतिबोधनेन सर्वं सार्थमिति चेत्; किममुख्यामन्या वा, पूर्वं चप्रसूतव्याघात',

सवस्योपस्थितमुख्यवृत्तिविषयबोधनोपक्षीणत्वात्, अनुपस्थितेऽपि लक्षणामेववदसि, अभिधानाङ्गीकारे वा किं सार्वज्ञ्यादिविशिष्टपरब्रह्माभिधानप्रद्वेषेण; उत्तरत्र "अधीहि"-त्यादि वैषम्यम्; ब्रह्मशब्दस्य मुख्यार्थमधीहीत्युक्ते लक्ष्यार्थलक्षणोपदेशस्य अप्रवृत्तेः, लक्ष्यार्थमधीहीति तु निरुत्थानम्, कारणाभावात्, मुख्यार्थबाधादिनिश्चयपूर्वकत्वादमुख्य(ख्यार्थ)वृत्तिविज्ञप्तेः, तन्निश्चयस्य चात्र ततः प्रागसिद्धेः, तत्सिद्धौ वा निर्विशेषावगमे किं प्रश्नेन प्रत्युक्त्या वा; मुख्यार्थबाधो निश्चितः, लक्ष्यार्थविशेषस्य न विदितः अस्मिन्नवसरे प्रश्नोऽस्तु, माभूत्, किं प्रत्यक्षेण बाधः, किंवानुमानेन, अथ तर्केण, अथवा तादृशेनागमेन; नाद्यः, अतीन्द्रिये प्रत्यक्षबाधायोगात्, न द्वितीय तृतीयौ; अनुमानस्य तर्कमात्रस्य च नित्यागमैःस्पर्धितुमशक्तेः; न चतुर्थः; न बृंहति न बृंहयतीति च वाक्यान्तराभावात्, निर्गुणादिवाक्यैस्तत्सिद्धिरिति चेत्; तथापि निर्मूलः प्रश्नः, तैरेवबुभुत्सित बोधात्; न च तैरपि (ततोऽपि) तत्सिद्धिर्न्याय्या, अविरुद्धविषयसिद्धा तेषामप्यन्यपर्यस्य वक्ष्यमाणत्वात्, आपातविदितार्थश्रुतिविप्रतिपत्त्यासन्दिहानः कीदृग्भूतं ब्रह्मशब्दविवक्षितमिति पृच्छतीति चेत्, नैवम्; तटस्थस्वरूपलक्षणाभ्यामपि कारणत्ववैलक्षण्यविषयाभ्यां सन्देहस्यैवस्थापनप्रसङ्गात्; न च निर्विशेषं सविशेषं वेति विमृशतोऽजगत्कारणत्वोक्त्यानिर्विशेषत्वनिश्चयस्सिध्येत्, अपि तु सर्वकारणत्वाक्षिप्तं सर्वज्ञत्व-

विदादिशब्दकण्ठोक्तश्च सर्वज्ञत्वादिकं बृहत्त्वमेव निर्धार्यते; नन्वविदितमुख्यलक्ष(लाक्षणि)कविभागः शिष्यो मुमुक्षुभिर्जिज्ञास्यं ब्रह्मेति सामान्यत उपश्रुत्य तत्स्वरूपं पृच्छति, आचार्यस्तु तत्त्वविद् ब्रह्मशब्दलक्ष्यनिर्विशेषवस्तुलक्षणमुपदिश(तु)ति, तदपि न, मुमुक्षुभिर्जिज्ञास्यं निर्विशेषमित्यस्यैव निर्मूलत्वात्; प्रत्युत "तमेवं विदा" नित्यादिभिर्विभूतिगुणविग्रहव्यापार विशिष्टमहापुरुषवेदनस्यैवामृतत्वप्राप्त्युपायत्वश्रवणाद्बाधाच; अतो यथाश्रुत एव ब्रह्मशब्दार्थः; निर्वक्ति च यास्कः "ब्रह्म परिवृढं सर्वत" इति. इदं सर्वमभिप्रेत्याभाष्यत "ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयत" इति, अभिधीयते—मुख्यवृत्त्या बोध्यते, अनेवनामकमनेवंविधञ्च किमपि ब्रह्मेति वदतां सर्वेषामप्य(मेवा)त्र निरासो भाव्यः, विशेषणद्वयेन च ब्रह्मपुरुषोत्तमशब्दयोर्निरुक्तिरपि व्यज्यते ।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां
ब्रह्मशब्दवृत्त्यनुपपत्ति वादः प्रथमः ।

---

श्रीमते निगमान्तमहादेशिकाय नमः ।

---

श्रीमते निगमान्तमहादेशिकाय नमः ।

# शतदूषण्यां जिज्ञासानुपपत्तिवादो द्वितीयः ।

अथ स्वात्मैकभासस्य निर्विशेषस्य दुष्यतः ।
विशुद्धस्यापि जिज्ञासा परेष्टा प्रतिषिध्यते ॥

यदाहुः । ब्रह्मशब्दनिर्दिष्टं विचार्यम् अनुदितानस्तमितस्वरूपैकप्रकाशमशेषविशेषशून्यमनाद्यविद्यान्धकारितनित्यशुद्धञ्चेति, तत्र विचित्रो व्याघातः, यद्धि नवित्तिकर्म कथन्तत्र जिज्ञासा; सामान्यतोविदितेविशेषतश्च वेदितव्ये तत्प्रवृत्तेः; अन्यथाहेतुप्रयोजनविरहे तदयोगात्, न च ब्रह्मणि तथाविधवेदनद्वयविषयत्वं परैरिष्यते, जिज्ञासापूर्वकं परीक्षणमत्रप्रक्रम्यते, तच्च तत्र प्रमाणोपक्षेपेण, प्रमाणञ्च निर्विषयत्न निरूप्यम्, सविषयत्वे तु तद्विषयत्वात् दृश्यत्वमिथ्यात्वजडत्वादिस्वोक्तानिष्टापत्तिः, स्वरूपप्रकाश एव हेतुः फलञ्च जिज्ञासाया इति चेन्न; तस्यास्तदुभयसामानाधिकरण्यनियमदृष्टेः, स्वरूपप्रकाशस्य च तदेकाधारताभावात्, अनादेः प्रकाशस्य च निरपेक्षहेतुत्वे जिज्ञासानादित्वप्रसक्तेः, सापेक्षत्वे यथादर्शनं स्वविषयवेदनापेक्षणात्, प्रागसिद्धस्य तुच्छत्वकार्यत्वयोरन्यतरप्रसङ्गात्, प्राक्सिद्धस्य फलत्वायोगात्, फलत्वे चानादित्वभङ्गात्, उपहितरूपेण वेदनद्वयविषयत्वाज्जिज्ञासा स्यादिति चेन्न; हेतोरुपहितविषयत्वाभ्युपगमेऽपि फलस्य तथात्वे भ्रान्तित्वापातात्, भ्रान्तेश्चासम्पाद्यत्वाच्च

तदर्थं(र्थे) प्रेक्षावतां प्रारम्भः, भ्रान्तिमेव प्रमितिमन्यमानैरस्या अपाद्येति चेन्न, परीक्षकेभ्योऽपि प्राथमिकभ्रान्तिप्रमात्वव्यवसायिनामेव प्रागल्भ्यप्रसङ्गात्, स्वरूपव्यतिरिक्तं सर्वं मिथ्येति प्रयोजकशिक्षणविरोधाच्च, नित्यभूतेऽपि समाधिवत् स्वमात्रं साक्षित्वं वैशद्यमात्रं वा साध्यमिति चेन्न; तयोरपि तत्स्वरूपत्वे सिद्धत्वात्, धर्मत्वे सत्यत्वमिथ्यात्वविकल्पक्षोभात्, अतिरिक्ताकारप्रकाश एव (च वै) चेद्वैशद्यन्तस्मिन्नप्याकारे स एव विकल्पः, नित्यस्वमात्रेऽपि निरंशेनिर्विशेषे च क इदानीं प्रकाश्य आकारः, कथञ्च जिज्ञासा, इदं किमिति वा कथमिति वा स्यात्, सर्वत्र यथायथं विदिताविदिताकारभेदो दुस्त्यजः, तत्स्वावगत्यनवगत्योर्नैष्फल्यनिर्वर्तुकत्वाभ्यां तदयोगात्, किं कथमित्यत्र का गतिरिति चेत्, न, तत्रापि सामान्यतः प्रतीतसमुदायान्तर्गतविशेषनिर्धारणार्थत्वात्किमादेः, एतेषु किङ्कथमित्येव हि तत्र काङ्क्षा यः पुनर्ज्ञाताज्ञातांशविकल्पेन जिज्ञासास्वरूपमेव खण्डयेत्, स ब्रह्मजिज्ञासामपि जिघांसती(खण्डयेदि)ति कः प्रकृतोपयोगः, दृष्टा च सा यथालोकमिहापि, अन्यथाऽनारम्भेण शास्त्रोच्छित्तेः, अस्तिहापि सामान्यतः स्वरूपज्ञप्ति अध्यासविरोधिरूपेण विशेषतश्च जिज्ञासा, सैव, निर्विशेषे सामान्यासिद्धेः, निस्सामान्ये च विशेषायोगात्, कल्पनया तदुपपत्तिरिति चेन्न, सामान्यरूपस्य कल्पितत्वे स्वरूपोच्छित्तेः, विशेषासम्भवाच्च नह्यकिञ्चिद्भूतो विशेषतः कश्चित्

स्यात्, न खलु खरशृङ्गे कुण्ठत्वादिः; न च "अस्ति ब्रह्मेति चेद्वेद, सन्तमेनन्ततोविदु"रिति श्रावयन्ती श्रुतिः ब्रह्मणःसामान्यधीबाधंसहेत; अतएवा(वकल्पिता)स्तित्वरूपसामान्याकारभ्रमाद्विशेष बुभुत्सेति प्रत्युक्तम्, अपसिद्धान्ताच; विशेषस्य तु कल्पितत्वे तज्जिज्ञासावैफल्यं, न हि ब्रह्मण्यसद्पूर्वाकारकल्पनार्थं पूर्वकल्पितमिथ्याकारप्रतीत्यर्थं वा शारीरकमित्यवेदबाह्यः कश्चिदपि क्षमते, कल्पिताकारमिथ्यात्वबोधनार्थमिति तु स्यात्, न तर्हि ब्रह्मजिज्ञास्यम्, अपि त्वयमाकारस्सत्योमिथ्यावेति, ततः किमिति चेत्, श्रुतिसूत्र स्वरसार्थभङ्ग(त्याग) स्तावत्, ब्रह्मात्मैक्यं शास्त्रवेद्यमिति स्वमतव्याहतिश्च, कल्पितभेदमिथ्यात्वधीरेव तद्धीरिति चेत्, न, माध्यमिकमतेऽपि तद्भावेन त्वदिष्टैक्यलाभे तद्विवादविलयापातात्; यच्च मन्यसे, कल्पिताकार मिथ्यात्वबुद्ध्यापि ब्रह्मणस्तच्छून्यत्वमवसेयमिति तज्जिज्ञासाद्युपपत्तिरिति, तदपि यदि सामान्यबुद्धिक्रोडीकृतन्तदा न जिज्ञास्यम्; बहिष्ठस्तु सत्यत्वे सद्वितीयता, मिथ्यात्वे प्रतियोगिसाहित्यसत्यता, साहित्यराहित्ययोस्सहज सहपात्, परस्परविरोधे (च) प्रकारान्तरस्थित्ययोगात्; यदि राहित्यमपि कल्पितं, कथन्तदा कल्पिताकारराहित्यनिवृत्तिः; यत्किञ्चिन्निवृत्तिमात्रन्तु प्रागपि सुलभमिति कृतं (किं) तदर्थविचारव्यसनेन, अतस्स्वीकुरुष्वासत्यसत्याकार(द्वय)वैशिष्ट्यं परिहर वा तज्जिज्ञासामिति. किञ्च यथाऽहं ब्रह्मजिज्ञासो-

वेदितव्यन्तर्हि दुस्त्यजन्नैष्फल्यम्, **तथा** प्रकाशस्य संसारभेषजत्वाभ्युपगमात्, अन्यथा **प्रागेव** मुक्तिसिद्धौ किमर्था जिज्ञासा, **कथ**ञ्चाशुद्धतत्त्वोपदेशिनश्शास्त्रस्य तत्त्वावेदकत्वम्, कथन्तरामतत्त्वज्ञानेन भ्रान्तिविलयः ; ननु भरन्भ्रमेण दामदर्वीकरभ्रमनिवृत्तिवत्स्यात्; न स्यात्, तद्वदेव **भ्रान्त्य**न्तरस्थिता**वात्य**न्तिकत्वासिद्धेः; **तद्विला**पकतत्त्वज्ञानादेरक्रमेणाभासम्भवात्; **अहेतु**कविनाशादेश्च निरसिष्यमाणत्वात्। **मुक्त**स्तर्हि जिज्ञास्य**म**पि न ते स्यात्; अज्ञाततत्त्वरूपस्पर्शानभ्युपगमात्, **शाखा**चन्द्रन्यायेन स्वरूपस्पर्श इवेति मतमिति चेत्; **कथ**न्तदधीनबोधविषयतामन्तरेण दृष्टान्तदार्ष्टान्तिकयोस्तदुपलक्ष्यत्वम्, तद्विषयत्वे च कथन्तत्प्रयुक्तदोषातिक्रमः, **सोऽपि** बोधस्स्ववेद्यत(ता)या भ्रान्तिरसत्यत्वेत्यदोष इति चेत्, **विलीन**न्तत्त्वावेदकवाक्यैः; वेद्यमिथ्यात्वमन्तरेण भ्रान्तित्वायोगात्, **उपल**क्षणपर्यालम्बननैष्फल्याच्च; शुद्धिश्चास्य नित्याऽनित्या वा, आद्ये **किमर्था**जिज्ञासा, **अन्तत**स्तस्यास्तादर्थ्यात्, शुद्धताध्यवसायार्थं सा स्यात् न तु शुद्ध्यर्थमिति चेन्न, **तदध्य**वसायेनापि तत्सिद्ध्यर्थेन भवितव्यम्, अन्यथा नैष्फल्यात्, **आरोपि**ताशुद्धिनिरसनात् साफल्यमिति चेन्न, **आरो**पसंभवे नित्यशुद्ध्ययोगात्; **उपरक्ते**ऽपि स्फटिकेऽशुभ्रत्ववत् (तत्) संभव इति चेन्न, भावानभिज्ञानात्, न हि वय**मारोप्य**(प)दोषत्वेनाशुद्धिं प्रसञ्जयामः, **ब्रह्म**ण्येव कुदृष्टिक(र्तृक)ल्पितविविध(विपर्यय)दोषदृष्टेरभ्युपगमात्,

किन्तु **भ्रमाद्याधारतया, न तथा** स्फटिकस्स्वयं **स्वात्म**निरागमध्यस्यति, **न च** तत्कर्तृकोऽन्यकर्तृको वा रागाध्यासस्तच्छुद्धिमाच्छुद्धिविरोधी; **इह** तु स्वदोषेण ब्रह्मणि स्वयमेव संभ्रम्यमाणे कथं भ्रान्त्यादिमत्यनीकतामयी शुद्धिर्नित्या; भ्रान्तिरपि स्फटिकरागादि(राग)वत्तत्त्वतो नास्तीति निस्सार इति चेत्, स्थितन्तर्हि **विचार**नैष्फल्यम्, असत्यैव भ्रान्तिस्सतीव भातीति **तन्निवर्तनम्** फलमिति चेत्, न, तत्सत्त्वभ्रमसत्यत्वमिथ्यात्वविकल्पे (सति) सद्वितीयत्वा**नवस्थ**योरन्यतरापातात्; **स्वरूपेण** सह्मनभ्रान्यति किन्तु जीवेश्वररूपाभ्यामिति चेत्; हन्त एकां व्याहतिम् परिहर्तुमनेकामुपादत्से; कथमभ्रान्तस्य तस्य तद्भावः, **कथं** सर्वज्ञोऽपि भ्राम्यतीति विरचय्युत्तिष्ठेत; **कथञ्च** एक आत्मायुगपत्सर्वज्ञमज्ञञ्चात्मानमनुसन्दधीत; प्रपञ्चयिष्यते चैतत्. **उत्तरञ्च** तु नित्यशुद्धत्वश्रुत्यादिविरोधः, किञ्चोभयावधिमत्तयातदनित्यत्वम् उत्तरैकावधिमत्तया पूर्वैकावधिमत्तया वा; नाद्यः, त्रिवर्गापवर्गयोरैकराश्यप्रसङ्गात्, वैराग्योपदेशादिवैयर्थ्यात्; अपुनरावृत्ति श्रुत्यादिविरोधाच्च; अत एव न द्वितीयः, **बन्धमो**क्षयोर्व्युत्क्रमताप्रसङ्गात्, शुद्धेरसाध्यत्वेन विचारादिनैष्फल्याच्च; तृतीयस्तु न शुद्धेर्नित्यस्वरूपैक्ये स्यात्; निरवधिकत्वसावधिकत्वयोर्नित्यवैरात्, **अतिरेके** च स एव सत्यासत्यविकल्पावतार इति. **यद्यप्यस्मन्मते** नित्यशुद्ध ईश्वरः साध्यशुद्धिः चेतनश्च जिज्ञासेते, तथापि न प्रति-

वन्दी; ईश्वरशङ्केरबाध्यत्वात्, जीवशङ्केस्ताभ्याया अपि स्वरूपान्यत्वात् सत्यत्वाच्च; उदारगुणसागरः परमपुरुषः स्वाराधनात्मकशास्त्रार्थसमीहितस्त्रिवर्गमपवर्गञ्च प्रयच्छतीति हि प्राचीमर्यादा, स यदि स्वपमेव भ्राम्येत् आश्रितपापौपयिकगुणहीनो वा न तर्हि जिज्ञास्यः, "स्वरूपेऽप्यग्रकस्थे"ति न्यायात्, कल्पितसार्वज्ञ्यादि योगात् तद्भावेऽपि तीर्थादिवत् तस्य भजनम् स्यादिति चेत्; कल्पितस्य सार्वज्ञ्यादेर्जिनादिष्वपि सिद्धेस्तदुपपत्तिप्रसङ्गात्; सर्वेष्वपि न तत्कृतिरिति चेत्; अविशेषात्; महाजनपरिग्रहादिति चेत्; सर्वेषां सर्वगणकूटनमिच्छतां क्वचिदपि प्रामाणिकत्वादिमहापरिग्रहस्यासिद्धेः, प्राचुर्यस्य विनाशादप्रयोजकत्वाच्च. यत्तु तीर्थादिवदिति, तत्तदात्मकेन, यदि तस्यैवेव तदुपपाद्या(तदुपास्त्या)प्रसादोऽन्यः; न हि क्रियामात्रकृतपूर्वाण्यत्र फलन्तीति नैगमः पन्थाः; उक्तन्यायेन जैनगन्धिवेदान्तिमतेऽपिजिज्ञासानुपपत्तिर्द्रष्टव्या. तदेतदखिलमभिधाय भट्टपादाभिधेयमुभयलिङ्गं सर्वपरं प्रस्तुय तस्यैवारम्भसूत्रे विवक्षितत्वात् "तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्य" इति।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्याम्
जिज्ञासानुपपत्तिवादो द्वितीयः ।

---

# श्रीमते निगमान्तमहादेशिकाय नमः ।

शतदूषण्याम्

## ऐकशास्त्यसमर्थनवादस्तृतीयः ।



चय्यन्ताः कर्मभागेन सौहार्दं समधिश्रिताः ।
मुक्तिं यद्भजनाद्यान्तमनन्तमुपास्महे ॥

स्थितन्तावदध्ययनविधिनाऽध्यापनविधिनावाप्रयुक्तमध्ययनं साङ्गशिरस्क (कृत्स्न) स्वाध्यायविषयमिति. रागतो विधितोवाप्रयुक्तस्तदर्थविचारोपि कृत्स्नगोचरः; तयोस्सङ्कोचकाभावात्, ननु विधिप्रयुक्तौ माभूत्सङ्कोचः, रागप्रयुक्तौ तु स्यात्, यावद्रागम् प्रवृत्त्युपपत्तेः, नैवम् विकल्पासहत्वात्; किं ब्रह्मणि विचारसङ्कोचः किं वाकर्मणि; नाद्यः, पुरुषस्य चतुर्ष्वपि पुरुषार्थेषु रागसंभवात्, क्रमेण भोगसंभवे विरोधाभावाच्च. सन्ति ह्युभयभावनास्तथाविधाः. यस्य तु काचित्कोरागः तस्यैकदेशविचारे का विचिकित्सेति चेन्न; यस्य लोकायतोपप्लुतमतेर्द्विवर्गमात्रनिष्ठस्य वेदोदितेषु चतुर्ष्वप्यनास्था, यस्य चाप्रक्रियापद्धा, तस्य केतिप्रसङ्गात्. अस्त्वनर्हस्यानधिकारः स्वार्हं प्रति प्रवृत्तामीमांसेति चेत् तुल्यं त्रिकाण्ड्यामपि. तिष्ठतु पुरुषार्थरागः, कृत्स्नप्रवचनादिरागादपि कृत्स्नविचारस्समस्ति; तेन न ब्रह्ममात्रेविचारसङ्कोचः. कर्ममात्रे च विचारं सङ्कोचयन् कबन्धमीमांसकस्तु राहुमी-

सन्दी, ईश्वरशुद्धेरसाध्यत्वात्, जीवशुद्धेस्साध्याया अपि स्वरूपान्यत्वात् सत्यत्वाच्च, उदारगुणसागर परमपुरुष स्वाराधनात्मकशास्त्रार्थसप्रीतस्त्रिवर्गमपवर्गञ्च प्रयच्छतीति हि प्राचीमर्यादा, स यदि स्वयमेव भ्राम्येत् स्वाश्रितत्वा-नौपयिकगुणहीनो वा न तर्हि जिज्ञास्य, "स्वरचणेऽप्य-शक्तस्ये"ति न्यायात्, कल्पितसार्वज्ञ्यादि योगात् तद्-भावेऽपि तीर्थादिवद्वा तस्य भजनम् स्यादिति चेन्न, कल्पितस्य सार्वज्ञ्यादेर्जिनादिष्वपि सिद्धेस्तदुपसत्तिप्रसङ्गात्, सर्वेषु न तत्कॢप्तिरिति चेन्न अविशेषात् महा-जनपरिग्रहादिशेष इति चेन्न सर्वेषां सर्वतस्समूढत्व-मिच्छतां क्वचिदपि प्रामाणिकत्वादिलक्षणमहत्त्वस्यासिद्धेः, प्राचुर्यस्य विगानादप्रयोजकत्वाच्च यत्तु तीर्थादिवदिति, तत्तदासद्येत, यदि तत्स्वेवयेव तदुपसत्त्या(तदुपास्त्या)प्रसा-द्योऽन्य, न हि क्रियातच्छक्त्यपूर्वाण्येव फलन्तीति नैगमः पन्था, उक्तन्यायेन जैनगन्धिवेदान्तिमतेऽपिजिज्ञासा-नुपपत्तिर्द्रष्टव्या तदेतदखिलमन्तर्निधाय ब्रह्मशब्दाभिधेय-मुभयलिङ्गं सर्वेश्वरं प्रस्तुत्य तस्यैवारम्भसूत्रे विवचितत्वमाह "तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्य" इति ।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्याम्
जिज्ञासानुपपत्तिवादो द्वितीयः ।

---

श्रीमते निगमान्तमहादेशिकाय नमः ।

शतदूषण्याम्

# ऐकशास्त्र्यसमर्थनवादस्तृतीयः ।



त्रय्यन्ताः कर्मभागेन सौहार्दं समधिश्रिताः ।
सुक्तिं यज्जगादाञ्जसमनन्तमुपास्महे ॥

**स्थितन्ता**वदध्ययनविधिनाऽध्यापनविधिनावाप्रयुक्तमध्ययनं साङ्गसशिरस्क (कृत्स्न) स्वाध्यायविषयमिति. रागतो विधितोवाप्रयुक्तस्तदर्थविचारोपि कृत्स्नगोचरः; तयोस्सङ्कोचकाभावात्, **ननु** विधिप्रयुक्तौ माभूत्सङ्कोचः, रागप्रयुक्तौ तु स्यात्, यावद्रागम् प्रवृत्त्युपपत्तेः, **मैवम्** विकल्पासहत्वात्; किं ब्रह्मणि विचारसङ्कोचः किं वाकर्मणि; नाद्यः, पुरुषस्य चतुर्ष्वपि पुरुषार्थेषु रागसंभवात्, **क्रमेण** भोगसंभवे विरोधाभावाच्च. सन्ति ह्युभयभावनास्तथाविधाः. **यस्य तु** काचित्कोरागः तस्यैकदेशविचारे का विचिकित्सेति चेन्न; **यस्य** लोकायतोपश्रुतमतेर्द्विवर्गमात्रनिष्ठस्य वेदोदितेषु चतुर्ष्वप्यनास्था, यस्य चाशक्तिरापन्ना, तस्य केतिप्रसङ्गात्. अस्त्वनर्हस्यानधिकारः स्वार्हं प्रति प्रवृत्तामीमांसेति चेत् **तुल्यं** त्रिकाण्ड्यामपि. **तिष्ठतु** पुरुषार्थरागः, कृत्स्नप्रवचनादिरागादपि कृत्स्नविचारस्समस्ति; तेन न ब्रह्ममात्रेविचारसङ्कोचः. **कर्ममात्रे** च विचारं सङ्कोचयन् कबन्धमीमांसकस्स्यात् **राहुमी-**

मांसकैरपि प्रतिवक्तव्यः, सिद्धेऽपि व्युत्पत्तिसंभवात्, अप्राप्ते स्वतः पुमर्थे च विषयप्रयोजनसङ्गत्यभावेऽपि श्रवणादियोगात्, अर्थज्ञानस्य स्वतन्त्रत्वे उपायानुष्ठानशेषत्वेऽपि तदुपयोगि सिद्धार्थबाधायोगाच्चेति. कर्मशेषभूतस्यात्मनश्शास्त्रान्तराद्विचार इति वदतापि शारीरकं शास्त्रैकदेश इति स्वीकर्तव्यम्, अन्यतस्तद्योगात्, तेनैव दन्तिभुक्तकपित्थन्यायेन निस्सार एव वेदान्त इति नास्तिकानां वचनमवधूयते. अस्तु तर्हि मन्त्रैकविषयतया विचारसङ्कोचः, अतिशयितपुरुषार्थप्रतीतौ "स्थितेरविन्द" इत्यादि न्यायावतारादिति चेन्न; कर्मविचारस्य कैश्चिदप्यननुष्ठानप्रसङ्गात्; अस्त्विति चेन्न; सत्यवचविरोधात्. अतिशयितपुरुषार्थप्रतीत्यभावात् कथंचित्तदुपपत्तिरिति चेन्न; तदभावस्तावत् वेदान्तभागानध्ययनाद्वा तत्सहकारिविरहाद्वा; नाद्यः, विधेः कृत्स्नविषयत्वस्यापभात्. न द्वितीयः, साङ्गाध्ययनादेव तथापि तत्सिद्धेः. न हि साङ्गाध्ययनविधेस्तत्रैव सर्वभारः, अन्यथापि तत्प्रसङ्गात्, तथात्वे वाक्यशास्त्रारम्भः. तत्सिद्धान्तपानादिदुर्वासना-(वशा)दाश्वादपथे प्रवर्तन्ते कर्ममीमांसका इति चेन्न', तथापि विविदिषा साधनाधिकारे कर्मणां सत्पथत्वस्वीकारात्. तथापि तद्विचारश्शारीरकशेष इति चेत्सिद्धं शास्त्रैक्यम्, कर्मस्वरूपादिविचारमन्तरेण विविदिषार्थविनियोगायोगात्; वेदनार्थविचारपक्षेऽपि किं पुनः. भवान्तरीयपरिपक्वविशेष-;शदितकषायस्य कस्यचिद्यत्नेन विविदिषोत्पत्तौ किं तदर्थे

(द्वेतु) कर्मविचारेणेति चेन्न, तथैव कस्यचिदत्यन्तमृदितकषायस्य जातिस्मरणादिवत् (रादेः) सिद्धज्ञानतया शारीरकेऽप्यनारम्भात्. तदर्हस्य तदारम्भ इति चेत् **एवमुभयार्हस्य** उभयारम्भ इति तुल्यम्, **न ह्यनधिकारिणं** विधिरधिकुरुते; रागोऽपि तथा, **न ह्यशक्यनीयमर्थं** वेदोऽपि विदधातीति न्यायात्; **यदा च** यावज्जीवमनुष्ठेयं ज्ञानमपवर्गोपाय इति वेत्स्यति, तदा तदुपचयार्थं तदर्थविविदिषानुवृत्त्यर्थं वा सत्कर्मणां नित्यानुष्ठेयत्वेन विचारोऽवश्यम्भावी, **न च** जन्मान्तरकर्मबलाद्यावज्जीवं विविदिषा स्यादिति निश्चेतुं शक्यम्, **प्राक्तनैरद्यतनैर्वा** सबलैर्विरोधिकर्मभिः तत्प्रतिबन्धशङ्कयापि नित्यं सत्कर्मणां सङ्ग्राह्यत्वात्, अन्यथा प्राक्तनैरेव कर्मभिर्वृष्टिः स्यादिति कारीर्यादिकमनुष्ठीयेत. **न च** नित्यनैमित्तिकविधिर्विविदिषोत्पत्त्या निवर्तते, वर्णाश्रमादिनिबन्धनत्वात्तस्य, **वर्णाश्रमाद्यभिमाननिवृत्त्या** तन्निवृत्तिरिति चेत्, केयमभिमाननिवृत्तिः, **किन्तद्भ्रमस्य** निवृत्तिः उत स्वसमवेतस्भ्रमस्य निवृत्तिः, **किं वा देहात्मतादात्म्य**भ्रमस्य निवृत्तिः, अथवा वर्णाश्रमाद्याश्रय पिण्डसम्बन्धभ्रान्तिनिवृत्तिः, अथवा **पिण्डस्यैव** निवृत्तिः, नाद्यः, **असिद्धेः**, न द्वितीयः, कर्ममीमांसकानामपि पारलौकिकात्मविदां वर्णादेस्स्वसमवेतत्व भ्रमाभावेन कर्मणामधिकार्यभावप्रसङ्गात्, नह्हि देहात्मभ्रमवन्तम्प्रतिधर्मोपदेशः. न तृतीयः, भ्रमनिवृत्तिर्हि देहातिरिक्तात्मविसम्भोपयिकतया

पारलौकिककर्मानुष्ठानयोग्यतामेवावच्छेदिति कथन्तया सा निवर्तते. न चतुर्थः, तत्सम्बन्धस्य सत्यत्वेन भ्रमत्वासिद्धेः. न पञ्चमः, ब्रह्मविचारस्याप्यनारम्भप्रसङ्गात्, प्रत्यक्षादिविरोधाच्च, वास्तवनिवृत्तिमात्रविवक्षायामविरोध इति चेन्न, तस्य कर्माधिकारदशायामपिभवता स्वीकारात्, किञ्च यावता कर्माधिकारोनिवर्तत इति मनुषे तावता वेदान्तश्रवणाद्यधिकारोऽपि निवर्तेत इति ब्रह्ममीमांसैव न स्यात्, न चायमिष्टप्रसङ्गः, तत्त्वज्ञानोदयात्पूर्वन्तदनभ्युपगमात्. ननु कर्ममीमांसाया वेदान्तविचारानुपयुक्तत्वान्न तया सहास्यैकशास्त्र्यमिति चेन्न, अनुपयोगासिद्धेः, कोऽसावुपयोग इति चेत् न्यायोपजीवनन्तावत्, तथाहि, बाह्यान्तरनिमित्ताप्रामाण्यनिराकरणेन प्रमाणलक्षणन्तावत्कृत्स्नोपयुक्तम्, भेदलक्षणोपजीवी च गुणोपसंहार पादः, तार्तीयाश्च श्रुतिलिङ्गादयस्तार्वचिकाः, प्रयुक्तिश्च वर्णाश्रमादिधर्माणां विद्याप्रयुक्तत्वाश्रमप्रयुक्तत्वादिविमर्शे निविशते, गतिचिन्तायाञ्च पाञ्चमिकः क्रमः, कार्त्तो विद्याधिकारचिन्तने विशेष्यते, अतिदेशादयश्च "तदेवरूपं यदमुष्यरूपम्" इत्यादिषु, अतः कर्ममीमांसानिरूपितस्वरूपैस्तन्न्यायैरेव हि वेदान्तार्थो विचार्यते, अपूर्वास्तत्र कतिपयैन्यायाः, विद्याङ्गभूतयज्ञादिस्वरूपशिक्षणञ्च ; अन्यथा "यज्ञेने"त्यादिवाक्यार्थानवबोधप्रसङ्गात्, न ह्यविदितपदार्थविशेषो वाक्यार्थावसायी स्यात्, यज्ञादिकल्पनञ्च तत्र तत्र क्रियते, तदपि यज्ञा-

दिश्वरूपनिरूपण मारेचम्. यच्चातिशयितपुरुषार्थप्रतीत्या तदर्थी वेदान्तभाग एव प्रवर्त्ततामिति, तन्नेयमतीति किमापातसम्भवा उत निर्णयात्मिका, न प्रथम, "अपाम सोमममृता अभूम, अक्षय्य ह वै चातुर्मास्ययाजिनस्सुकृतम्भवती"ति कर्मभागेऽप्यक्षयफलापातोपलम्भात्, ब्रह्मभागेऽपि "न प्रेत्य सञ्ज्ञास्ती"त्यादिभिरपुरुषार्थापातोपलम्भात्, ननु पूर्वापरवाक्यानुगुण्यात्तेषां स्तुतिमात्रपरत्वम्, अस्य तु वाक्यस्य तस्मादेव परमपुरुषार्थ एव तात्पर्यमिति वैषम्यमस्तीति चेत्, किन्तेन, अप्रमितत्वेन विचारनियमस्यानुपकारकत्वात् न द्वितीय, मीमांसयाविनातदसिद्धे, तत्त्वविदुपदेशात् तत्सिद्धिस्सम्भवतीति चेत्, तर्हि ब्रह्ममीमांसाया अप्यनारम्भस्स्यात्, तदुपदेशत एव ब्रह्मस्वरूपसिद्धे, तत एव भ्रमनिवृत्तेश्च, अत एकस्यैव पुरुषस्य वेदोदितसर्वपुरुषार्थयो(गि)ग्यतामाश्रित्य एकव्याख्येय व्याख्यानात्मना विप्रतिलक्षणमेकशास्त्रमिति. एतेनार्थप्रयोजनाधिकारिभेदाच्छास्त्रभेद इति निरस्तम्, सामान्यतो वेदार्थपुरुषार्थतदर्थित्वरूपेण तेषामभेदासिद्धे, अवान्तरार्थभेदादेश्शास्त्रैक्येऽप्यविरोधात्, अन्यथा षड्ध्यायादिभेदेऽपि भिन्नशास्त्रत्वप्रसङ्गात्, न चैवं वेदार्थानुबन्धित्वाविशेषाद्विद्यास्थानभेदविलयप्रसङ्ग इति वाच्यम्, उपकारभेदेन तद्भेद व्यवस्थापनात्, अतएव हीतिहासपुराणयोर्दूरविप्रकर्षादेकविद्यास्थानत्वनियम, न च धर्मशास्त्रदेशाच

महर्षिभिः पृथक्परिसंख्यानम्, तथापि भिन्नकर्तृकयोः कथमेकप्रबन्धत्वमिति चेन्न, एकेनापि कर्त्राऽनेककार्यारम्भदर्शनात्, अनेकैरप्येकरथगोपुरप्राकारादिनिर्माणदर्शनाच्च, निबन्धनेष्वयं विशेष इति चेन्न, तत्राप्येकेन विदुषाऽनेकप्रबन्धकरणदर्शनात्, पाणिनीयवृत्ति कादम्बरीप्रभृतिषु चानेककर्तृकत्वेऽप्येकप्रबन्धत्व सम्प्रतिपत्तेश्च, न च कर्तृभेदे किम्प्रमाणमिति चेत्, कर्मब्रह्ममीमांसयोरपि वा किम्, उपदेशपारम्पर्यमिति चेत्तुल्यम्; अस्तु तर्ह्यर्थविरोधात् भेद इति चेत्, कोऽसौ विरोधः, द्वैताद्वैतगोचरत्वमिति चेन्न, तयोरेकनिष्ठत्वासिद्धेः, न हि कर्मकाण्डनिरूपितफलकरणेतिकर्तव्यतादीनामैक्यमृद्धैक्यादिविषयेषु वेदान्तेष्वभिधीयते, तत्सत्यत्वमिथ्यात्वप्रतिपादनाद्विरोध इति चेन्न, वेदान्तभागस्य प्रपञ्चमिथ्यात्वतात्पर्याभ्युपगमे कर्मभागस्य तत्सत्यत्वप्रतिपादनतात्पर्यासिद्धेः, सत्यत्वाभावेऽपि हि त्वदुक्तव्यावहारिकमर्यादया फलकरणभावादिकन्निरूपयितुं शक्यते, अन्यथा वेदान्तविचारस्यापि प्रमाणतर्कादिभेदसापेक्षत्वेन स्वव्याघातप्रसङ्गः, सगुणब्रह्मोपासन तत्फलादिचिन्तनमपि शास्त्रान्तरसाध्यं स्यात्, यदा त्वसदुक्त न्यायेन सकलकर्मसमाराध्यमनन्तगुणविभूतिकम्ब्रह्म वेदान्तवेद्यन्तदा तु न विरोधगन्धोऽपि, निरीश्वरत्व सेश्वरत्वाभ्यां विरोध इति चेन्न, जैमिनिसूत्रेष्वीश्वरप्रतिक्षेपादर्शनात्, अर्वाचीन व्याख्यातृकल्पितानान्तु अनादरणीयत्वात्, अतएव सेश्वर-

मीमांसापक्षोऽपि नातीव विच्छिन्नः, परैरनूद्यते च, देवताकाण्डञ्च कर्मकाण्डशेषतया ,भाष्यकारैः परिगृहीतम्, "तदुक्तं सङ्कर्षे" इति तत्रत्यसूत्राणि चोदाहरन्ति. तस्य च काण्डस्योपसंहारे "अन्तेहरौतद्दर्शनात्" इति देवताकाण्डसन्दर्भे "स विष्णुराह हि" इति सर्वदेवताराधनानामन्त्यपर्यवसानाय तस्य सर्वान्तरात्मत्वेन व्याप्तिम्प्रतिपाद्य "तम्ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते" इति तस्यैव वेदान्तवेद्यपरब्रह्मत्वोपक्षेपेणोपसंहारात्. सामान्यतो विशेषतश्चेश्वरः प्रस्तुत इति तत्त्वविदां सम्प्रदायः. अतएव कर्मकाण्डदेवताधिकरणमपि कर्मप्राशस्त्यमात्रपरम्, किमलौकिकदेवताविग्रहादिसमर्थनप्रयासेन, यथाश्रुतकर्मण एव फलप्रदत्वशक्तिरित्येतावतैवोक्तेन परप्रतिक्षेपात्, अश्रुतवेदान्तानामरोचनासिद्धेश्च, सहसा च (गूढा) गुह्यार्थानामवचनीयत्वात्. एवं सति ब्रह्मकाण्डदेवताधिकरणैकरस्यसि(द्धि)द्धेः, द्रव्यदेवतयोर्द्रव्यबलीयस्त्ववर्णनमपि न देवताविग्रहाद्यपारमार्थ्यलिङ्गम्, प्रतीति सन्निकर्षविप्रकर्षाभ्यामेव प्राबल्यदौर्बल्यसिद्धेः. यद्यपि द्रव्यस्यापि धर्मत्वमरोचम्, तथापि स्वरूपतः प्रत्यक्षतया विशेषोस्त्येव, एवं सर्वत्राविरोधस्त्वीश्वरमीमांसायामनुसन्धातव्यः. तथापि "मध्वादिष्वसम्भवादनधिकारञ्जैमिनिः, धर्मञ्जैमिनिरत एव, शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः, परामर्शञ्जैमिनिरचोदनाचापवदति हि, परञ्जैमिनिर्मुख्यत्वात्,

श्राश्मरथ्यजैमिनिरुपन्यासादिभ्यः, भावञ्जैमिनिर्विकल्पामननात्," इति सूत्रेषु जैमिनिमतस्य पूर्वपक्षत्वेनोपपादनात् विरोधस्सिद्ध इति चेन्न, अत्यल्पतराप्रधानार्थविवादस्य प्रधानभेदकत्वाभावात्, अतएव हि शास्त्रेषु वार्तिकावतारः, किम्पूर्वकृतप्रासादखण्डे विषमांशापनयनेन प्रेषनिर्माणे तदैक्यमास्ति, अतः प्रतिसंस्कारेणात्रापि सन्धानम्. यद्वा वैभवोक्तेषु तत्त्वभ्रमोमन्दधियाम्माभूदिति तदनुवादप्रतिक्षेपौ, "तदुक्तन्तदुक्त"मिति जैमिनिपरिग्रह एव बहुशो दृश्यते, विशेषतश्च, "साक्षादप्यविरोधञ्जैमिनिः, सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति, अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके, तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः," इति सूत्रेषु भगवता बादरायणेन स्वाभिमतार्थस्थापनाय जैमिनिस्स्वनाम्नैवोपात्तः. स च भगवान् जैमिनिः "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणम्बादरायणस्यानपेक्षत्वात्" इति स्वोक्तार्थं सम(प्रति)पत्तये स्वाचार्यम्बादरायणमेव पुरस्करोति, जैमिनेर्बादरायणशिष्यत्वञ्च महाभारतादिषु प्रसिद्धम्, "सुमन्तुञ्जैमिनिञ्चैव वैशम्पायनमेव च" इत्यादिना; नन्वत्र व्यासस्य शिष्यो जैमिनिरित्युक्तम्, सत्यम्, व्यास एवात्र बादरायणः, "द्वीपे बदरिकामिश्रे बादरायणमच्युतम् । पराशरात्सत्यवती पुत्रं लेभे परन्तपम्" ॥ इति

हि स्मर्यते व्यासव्यतिरिक्तेऽपि बादरायणसञ्ज्ञा प्रयुक्तेति चेत्तथापि, "तपो विशिष्टादपि वै वसिष्ठान्मुनिसत्तमात् । मन्ये(श्रे)ज्येष्ठतमन्वाद्यरहस्य ज्ञानवेदन" इति रहस्यतमार्थज्ञापकत्वेन प्रसिद्धिप्रकर्षादेः सम्प्रदायाच्च व्यास एव स्वीक्रियते, अतएव हि युमद्भूमिकामाश्रिता वाचस्पतिप्रभृतयोऽपि व्याससेव ब्रह्मसूत्रकृतमाचख्युः, येषु च सूत्रेषु पूर्वपक्षतया जैमिनिमतमुक्तम् शारीरके, तेष्वपि देवतासद्भावः परब्रह्मसद्भावो मुक्तस्य परब्रह्मसाम्यापत्तिर्विग्रहादिसद्भावश्च प्रतीयते, तदपि च तत्प्रणीतकर्मकाण्डदेवताधिकरणादेरन्यपरत्वं स्थिरीकरोति, न ह्यर्वाचीनवज्जैमिनिहृदयानभिज्ञस्तदाचार्यो बादरायणः, अतः परस्परसम्मत्या कार्यान्तरेष्विवात्रापि यथाप्रकरणमपि युक्तम्. तदेतदखिलमभिप्रत्योक्तम्भगवता बोधायनेन, "संहितमेतच्छारीरकञ्जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" इति, तदेतदुपादायव्यमृणीत च भाष्यकारः नन्वेतावतापि कर्मब्रह्ममीमांसयोरैकशास्त्र्ये सबन्धैक्ये वा किम्प्रमाणमुपन्यस्तमिति चेत्, किंवा कर्मकाण्डद्वादशाध्याय्यादौ शारीरकचतुरध्याय्याञ्च प्रत्येकमैकशास्त्र्ये त्वया निर्णीतम्, क्रमविशेषनियामकसङ्गतिविशेषविशिष्टाविरुद्धावान्तरार्थशास्त्रान्तरव्यावृत्तासाधारणोपकाराद्यं सप्रकारैकप्रधानार्थत्वमिति चेत्, इदन्तु किम्प्रमाणमिति निपुणोभूत्वा त्वमेव निरूपय, त्यज वा सर्वैक्यम्. तस्मात् "अथातो

धर्मजिज्ञासा" इत्यारभ्य "अनावृत्तिश्शब्दादनावृत्तिश्श-
१८५ ब्दात्" इत्येवमन्तङ्कर्मदेवतापरदेवतागोचरतया विभक्त-
काण्डत्रयं विंशतिलक्षणमेकं शास्त्रमिति. तदिदम् "मी-
मांसाशास्त्रम्" इत्यादिना भाष्येण दर्शितमिति.

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वे-
ङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्यां
ऐकशास्त्र्यसमर्थनवादस्तृतीयः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

---

श्रीमते निगमान्तमहादेशिकाय नमः ।

# शतदूषण्याम्

## अविधेयज्ञानवादभङ्गश्चतुर्थः ।



विधिवत्स्तैर्यत्तत्कथितमविधेयश्रुतिपथै-
र्विधत्ते दुःखाब्धेर्विलयमविधेयामतिरिति ।
तदुद्धूयोपायम्भगवदुपसत्तिप्रथयते
नमस्यामस्यामो यतिपरिदृढाय प्रतिकलम् ॥

यदेतद्भ्रान्तजनजल्पितम्, समूलस्य संसारस्य संविन्मात्रे परस्मिन् ब्रह्मण्यारोपितत्वादलीककलधौतादेरिवाधिष्ठानयाथात्म्याध्यवसायादेव विलयः, न पुनः कर्मणोपासनेन वा विहितेनादृष्टद्वारा, आहुश्च "मणिमन्त्रौषधादिभ्यो दण्डघातादिनापि वा । क्रियते नैव केनापि माया-कुण्डलिखण्डनम्" इति, यत्पुन(रुन्मत्तान्) बंभ्रम्यमाणान् प्रतिभिषज्यते, तदपि तत्रानारोपितत्वाभिमतदोषविशेषमोचनायैव, न पुनस्तदधीनधीविशेषमात्रसिद्ध मिथ्यापदार्थनिवर्तनाय, दोषे तु शममुपेयुषि स्वरसवाहितत्त्वज्ञानादेव तन्निवृत्तिः, अत्राप्याहुः "भ्रान्तभेषजनिर्माणन्नभ्रान्तिरूपशान्तये। किन्तु भ्रान्तिनिदानस्य दोषस्यैवोपशान्तये" इति, नचात्रापि दोषनिवारणाय वैधापेक्षानुप्रवेशः, दोषस्यापत्र

दृङ्मात्राधीनसिद्धितया मिथ्यात्वाविशेषेण एकदेशस्यैव तत्त्वज्ञानेन निवार्यत्वात्, ततश्च,

विश्वमिथ्यात्वविज्ञान(कथा)कुविनिक्षेपभक्षित । नापेक्षते पुनर्दोष कर्माध्यात्मबाध(न)कम् ॥ लौकिकस्य तु दोषस्य व्यावहारिकव्यवस्था(न)नातिक्रमाद्भेषजाद्यवकाश, यद्यप्यविद्यायामपि भासमाना, तथापि तथाविधत्वप्रबोधनाय प्रवृत्तत्वाद्वाक्यस्य तावतैव तन्निवृत्त्युपपत्ति, न च ज्ञानं स्वरूपेण विधातुं शक्यम्, अत एव द्रष्टव्य इत्यपि फलानुवाद इति निरणैषु, तदर्थतया च न श्रवणादिविधिनैरर्थक्यम्, तादर्थ्यञ्च प्रतिबन्धकभेदवासनानिरसनद्वारेण, तस्याश्च प्रतिबन्धकत्वमसम्भावनाविपरीतसम्भावनाव्यापित्तविक्षेपहेतुत्वात्, "ब्रह्मवेद" इत्यादौ च ज्ञानमात्रस्यैव मोक्षहेतुत्वं श्रूयते, नचास्य वाक्यतः सिद्धस्यैव ज्ञानस्य विधेयत्वसम्भव, प्रमाणे शास्त्रमर्थवदिति हि न्यायविद. यद्यपि नायं सर्प इति युक्तत्वित्यादौ भ्रमनिरासार्थं ज्ञानविधिरदृश्यते, तथापि नायं सर्पं इत्येतावतैव सिद्धं ज्ञानं, विसम्भ्रमभिसन्धाय विधेयवदनूद्यते, यदि च नायं सर्पं इत्येतावता भ्रमो न निवर्तेत, तदा जानीहीति परस्सहस्रविधानेऽपि कथन्तन्निवृत्ति. अत, "तत्त्वमसि" इत्याद्युपदेशात्सोऽहमित्यादिरूपेण विवर्तमात्रयाधियैव विश्वाधिष्ठानसिद्ध्या समूलभेद भ्रमोन्मूलनमिति

सम्भूय, सिद्धे विश्वमिथ्यात्वे धीमात्रात्तन्निवर्तनम् ।

तदेव न घटेतेति यथावदभिधास्यते ॥ यत्तु लौकिकदोषस्याविद्यायाश्च मिथ्यात्वाविशेषेऽपि व्यावहारिकव्यवस्थया वैषम्यमुक्तम् तदपि न, मिथ्याभूतानामपि काचा(कामला)दिदोषाणां ज्ञानेतरनिवर्त्त्यत्वे दृष्टे सत्यविद्यायामपि तदविरोधात्. अस्त्वविरोधः, तथापि प्रयोजकोपदेशजन्यज्ञानादेव तन्निवृत्त्युपपत्तेः हेत्वन्तरपरिग्रहे कल्पना गौरवमिति चेन्न, श्रुते तदभावात्, तत्परिग्रह एव तत्प्रसङ्गाच्च, न हि श्रुतहानमाश्रयम्. ये च ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति प्रयोजकज्ञानवन्तः, तेऽपि चक्षुरादिगततिमिरादिदोषनाशाय प्रतिभटभङ्गाय च भेषजशस्त्रादीन् प्रयुञ्जाना दृश्यन्ते, न पुनर्मिथ्यात्वाध्यवसायमहाभेषजम्प्रमाणयन्तो जोषमासते.

आहुश्च, "मायावादिमतस्थाश्च महारोगेण (दूषि) पीडिताः । मञ्चेशयानादृश्यन्ते किञ्च भेषजकाङ्क्षिणः ॥" इति, तस्मादविद्यायामपि मिथ्यात्वाध्यवसायस्य प्रयोजकोपदेशवशात्सिद्धावपि दोषान्तरवदेव ज्ञानेतरहेतुनिवर्त्त्यत्वाविरोधात्तदर्थं कर्माङ्गोपासनविधान नानुपपन्नम्, उक्तञ्च वरदराजाचार्यैः, "यथा हरीतकीखादः क्रियते दोषशान्तये । तद्वद्दुरित शान्त्यर्थं क्रियतां हरिकीर्तनम् ॥" इति. यत्तूक्तम् न ज्ञानं स्वरूपेण विधातु शक्यमिति, तत्किं ज्ञानस्याभावरूपतया, उताभावार्थतया, यद्वा साक्षात्प्रयत्नविषयत्वाभावात्, अथवा साक्षात्पुरुषव्यापारत्वाभावात्, उत सांशभाव-

मानुप्रवेशविरहात्, अन्यस्माद्वा कुतश्चिदिति ; न प्रथमः, भवत्पक्षे शक्तिरूपस्य परपक्षे स्वात्मविशेषगुणस्य अस्मत्पक्षे तु तदवस्थाविशेषरूपस्य करणाधीनतया भाव्यत्वसिद्धेः.

आहुश्च "कादाचित्कस्वभावस्य भाव्यत्वेन वार्यते। तस्याकारणजन्यत्वे चार्वाकमतचर्वणम् ॥" इति ; न द्वितीयः, "ज्ञा अवबोधने" इति भावार्थतयैव पाणिनीय स्मरणात्, आत्मस्वरूपभूतज्ञानस्य तु विधानप्रसङ्गाभावात् ; न तृतीयः, प्रयत्नस्याविधेयत्वप्रसङ्गात्, लोके हि स्वाभिमतकार्यार्थम्प्रयतेतेति प्रयत्नविषयविधानदर्शनात् ; न चतुर्थः, भावार्थान्तराणामप्यविधेयत्वप्रसङ्गात् ; न पञ्चमः, यष्टव्य इत्यादौ यागादेरिव द्रष्टव्य इत्यादौ दर्शनस्यापि तदनुप्रवेशे विरोधाभावात् ; नापि षष्ठः ; ज्ञानविधि विरोधिनः कस्यचिदन्यस्यापि कुतश्चित्सिद्ध्यभावात् ; किञ्च यदि ज्ञानस्य विधेयत्वन्तर्हि यागादिविधिरपि न भवेत्, यागोऽपि हि देवतोद्देशेन द्रव्यत्यागात्मा बुद्धिविशेष एव, एवञ्च द्वादशाहे अविवाक्ये दशमेऽहनि बुद्धिविशेषरूपस्य मानसग्रहादेः कथं विधेयतेष्यते, कथं वा मनश्चिताद्यग्नीनां बुद्धिरूपाणान्तत्त्वविषयाणाञ्चोपासनानां विधेयत्वमिष्यते, कथञ्च दर्शनार्थतयापि श्रवणमनननिदिध्यासनानि विधेयानीच्छसि, तान्यपि ज्ञानविशेषरूपाण्येव ; ननु न तानि ज्ञानरूपाणि, अपि तु तदर्थव्यापाररूपाणीति चेत् तन्न, तदर्थत्वे सत्यपि तेषामपि स्वरूपस्य ज्ञानरूपत्वात्, श्रवणं हि नाम तत्त्वदर्शिन

आचार्याम्नाययुक्तार्थग्रहणम्, मननमपि तथा एवमेवेतदिति युक्तित प्रतिष्ठापनरूपो व्यवसाय, ध्यानमपि अनवरतभावनात्मकस्मृतिसन्तान , तदेवमेषां ज्ञानभूतानामेव यदि विधेयत्वमिष्येत, कथन्द्रष्टव्य इत्यत्र दर्शनस्य विधेयत्वन्नेष्यते,

**तथाच,** विष्णुर्यष्टव्य इत्यादौ विधिबाधनदर्शनात् । सर्वत्र स्याच्च तद्बाधो **दर्शने** वा न बाधनम् ॥ अथच ध्यानफलतया दर्शनमनूद्यत इति मन्यसे, **तदा** मनन ध्यानयोरपि पूर्वपूर्वफलतयाऽनुवाद इति किन्न कल्पयसि , अस्त्वेवमिति चेन्न, "फलोपकार्यङ्गतया श्रवणादित्रयविधि"रिति युष्माभि प्रतिपादनात्, तथाचैकस्यैव विधेयत्वमनुवाद्यत्वञ्चेति **विरोधः,** न हि विरुद्धं त्रिकद्वयापत्तिरनुमन्यते तान्त्रिकैः,

उक्तं हि "उद्देशेनानुवादेन प्राधान्येन समन्वितम् । उपादान विधान वा गुणत्वञ्चैव दृश्यते" ॥ इति , "उपस्थितेऽतस्तद्वचनात्" इति सूत्रोक्तन्यायेनोपासनस्य सांसारिकफलोत्तीर्णे प्राकरणिकस्वरूपाविर्भावपूर्वकनिरतिशयानन्दब्रह्मानुभवाख्ये फले सति द्रष्टव्य इत्यत्र निष्कारणविधिभङ्गप्रयासेन दर्शनस्य फलत्वङ्किमर्थङ्कल्प्यते, नियोगसाध्यत्वे मोक्षस्यानित्यत्वप्रसङ्गादिति चेन्न, मोक्षशब्देन दुःखध्वंसविवक्षाया साध्यत्वेऽपि नित्यत्वोपपत्ते , प्रायश्चित्तधर्मसाध्यपापध्वंसवच्च, **न च दुःखप्रध्वंसो** मोक्ष , किन्तु दुःख-

देहपूर्वकर्मध्वंस, दृश्यस्य क्षणिकत्वेन स्वयमेव विनाशात्, पुनर्दृश्यानुत्पत्तिश्चित्तावयवान्तरस्यागन्तुकत्वाभावेन प्रसङ्गाभाव, मद्गृहरूपविषयतायामपि तेनैव दृष्टोपपादनात्, न चनादिसिद्धमुक्तौपायमाफलित्यनुपपत्ती प्रतीति, स्वरूपाविर्भाव विवक्षायामपि नियोगविशेषादयत्ननिवृत्ते प्रतिबन्धे स्वरूपमात्राधीनस्य स्वरूपाविर्भावस्य स्वरूपवत्नित्यत्वात् पुनः प्रतिबन्धाभावाच्चानिवर्त्यत्वमुपपद्यते. ननु यद्युपासनविधौ फलतया मोक्ष श्रूयते तर्हि श्रवणमननदर्शनविधीनां किम्फलमिति चेन्न, श्रोतव्यो मन्तव्य इत्यनयोर्विधित्वाभावात्, द्रष्टव्य इत्यस्य तु पृथग्विधित्वाभावात्, निदिध्यासनापरपर्यायमुपासनमेव दर्शनरूपन्तस्मिन्वाक्ये विधेयम् तथा हि, श्रवणन्तावत् साङ्ग सशिरस्क स्वाध्यायाध्ययनजनितापातगतीतिविहितपुरुषार्थतत्साधननिर्णयार्थिन पुरुषस्य रागत एव सिद्धमिति न तत्र विध्यपेक्षा, श्रवणप्रतिष्ठार्थत्वान्मननस्य तदपि तत एव सिद्धमिति न तत्रापि, अतो यथावस्थितवाक्यार्थावगमस्य ध्यानोपकारकत्वात् तज्जनकयोश्श्रवणमननयोरिहानुवाद एव, ध्यानन्त्वप्राप्तत्वाद्विधेयमेव, यद्यपि चात्र विषयस्यानुकूलत्वात्तच्चिन्तनेऽपि रागस्सम्भवति, तथापि तत्तद्गुणविशेषविशिष्टस्याहरहरनुवर्तनीयस्य साङ्गस्य तस्य फलसाधनत्वधियमन्तरेण तथाविधविशिष्टानुष्ठानस्य रागप्राप्तत्वम सम्भवति, सा च धीश्चोदनयैव, तन्मूलश्च रागो यागादि-

अपि समानो विधेरपेक्षितश्चेति न दोषः. ननु यदि ध्यानोपकारकतया श्रवणमननयोरनुवादस्तर्हि द्रष्टव्य इत्येव विधिरस्तु, ध्यानन्तु तदुपकारकत्वेन सिद्धत्वाच्छ्रवणादिवदनूद्यत इति कल्प्यमिति चेन्न, ध्यानस्य दर्शनोपकारकत्वङ्किमदृष्टद्वारा उत दृष्टद्वारा, न पूर्वः, तस्य चोदनामन्तरेणासिद्धेः, उत्तरत्रापि दर्शनशब्देन किञ्चाक्षुषं ज्ञानं विवक्षितम्, उत प्रत्यक्षमात्रम्, यद्वा प्रत्यक्षसमानाकारमिति, आद्ये "न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेन" इत्यादिश्रुतिविरोधः, द्वितीयेऽपि किं लौकिकप्रत्यक्षम्, उत योगि प्रत्यक्षम्, पूर्वत्र ध्यानस्य लौकिकप्रत्यक्षजनकतायामन्वयव्यतिरेकाद्यभावेन अदृष्टद्वारा तत्सिद्धौ तत्रापि चित्रापशुफलत्वादाविव विध्यपेक्षैव, भावनाबलजन्तु प्रत्यक्षन्नाभ्युपगच्छामः, तस्य च "वृक्षे वृक्षे च पश्यामी"त्यादिवत् भ्रान्तौ स्मृति वैशद्यमात्रे वा पर्यवसानात्, न भ्रान्तिरनङ्गीकारात्, नापि स्मृति वैशद्यमसत्यक्षाङ्गीकारप्रसङ्गात्, इत(उत्त)रत्र तु योगिप्रत्यक्षस्य प्रकृष्टादृष्टजन्यत्वात् तन्मूलविध्यपेक्षायान्निदिध्यासितव्य इत्ययमेवात्र विधिरङ्गीकार्यं, तृतीये तु द्रष्टव्य इत्यनेन ध्यानस्यैव वैशद्यलक्षणविशेषविधानमिति तदेव सामान्यतो निदिध्यासितव्य इत्युच्यत इति वैशद्यविशिष्टध्यानसिद्धौ ध्यानदर्शनयोस्साध्यसाधनभावाभावात् कथन्दर्शनार्थतया ध्यानानुवादः ; नन्वेवमस्तु ध्यानस्य विधेयता, दर्शनन्तु

योगिप्रत्यक्षात्मकम्पृथग्विधेयमिति किन्नाङ्गीक्रियते, पृथक्फलनिर्देशाभावादिति न वक्तव्यं, मोक्षार्थतया विधेयस्य दर्शनस्य प्रधानत्वे तन्निर्वर्तकतया ध्यानस्यापि विधाने पृथक्फलनैरपेक्ष्यात्, प्रधानवाक्यार्थैक्योपपत्तेश्च ; अन्यथा दर्शनशब्दस्य मुख्यार्थभङ्गश्चेति चेत्, नैवम्, "ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति क्वचिद्ध्रुवानुस्मृतेः साक्षात्सर्वग्रन्थिविमोक्षहेतुत्वं श्रूयते स्मृतिलम्भ इति सप्तम्या, क्वचित्तु, "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥" इति दर्शनस्य तथैव फलसाधनत्वं श्रूयते, अनयोर्न तावदेकफलसाधनयोर्विकल्पः, गुरुलघुविकल्पायोगात्, अधिकारिभेदेन व्यवस्थितविकल्पकल्पनायामतिगौरवम्, विकल्पकल्पना तद्धानस्याकल्पना चेति, किञ्च विकल्पस्य प्रयोगचयेण प्रामाण्यत्यागाप्रामाण्यस्वीकारत्यक्तप्रामाण्यस्वीकारस्वीकृताप्रामाण्यपरित्यागावृत्तिरूपाष्टदोषदुष्टत्वादन्याय्यत्वमेव, नापि समुच्चयः, यौगपद्यस्याशक्यत्वात्, क्रमेऽप्युपकार्योपकारकयोरुपकार्यस्य फलहेतोरङ्गिनः स्वाङ्गेन सहसमुच्चयायोगात्, न च क्रमिकयोरपि दर्शपूर्णमासयोरिव ध्रुवानुस्मृति दर्शनयोरेककरणत्वम्, तदुपस्थापकश्रुत्याद्यभावात्, न चाङ्गभूतायान्ध्रुवानुस्मृतावङ्गिनो दर्शनस्यैव फलश्रौत्यत इति न विरोध इति वाच्यम्, अङ्गाङ्गिभावस्याद्याप्यनिश्चितत्वात्, दृष्टद्वारस्यासिद्धेः, अदृष्ट-

द्वारकल्पने गौरवात्, स्वतः प्रतीयमानार्थभङ्गे च श्रुतहानिदोषात्, **न चात्र** प्रजापतिवाक्यनयः, भूयसाम्नायविरोधात्, "द्वैधे बहूनां वचनम्" इति तान्त्रिकाः, भूयांसि हि वाक्यानि ध्यानोपासनादिशब्दैः ध्रुवानुस्मृतिमेव मोक्षसाधनमभिदधति, न केवलं श्रुतिरेव, स्मृतीतिहासपुराणसर्वान्तरतन्त्रयोगसाङ्ख्यशास्त्राण्यपि, दर्शनन्त्वल्पवाक्यावसितम्, एवमीश्वरोपासनस्यैव भूयोभिर्वाक्यैर्मोक्षसाधनत्वावसायात् तदन्यनिषेध श्रुतिसामर्थ्यात् क्वाचित्क जीवोपासनानां मोक्षसाधनतया श्रुतानां यथा लिङ्गजीवविशिष्टपरमात्मविषयतया अङ्गतया वा निर्वाहः, अत्र तु न तथेति विशेषः, अतः परिशेषात् ध्रुवानुस्मृतिदर्शनयोरैक्य एव पर्यवसानम्, विस्तृतश्चैतद्भाष्य एव, छागपशुन्यायेन वेदनध्यानादिशब्दानामुत्तरोत्तरं विश्रान्ति प्रतिपादनात्; **एवं स्थिते** स्मृतिदर्शनशब्दयोर्मुख्यैकार्थासम्भवे कस्य चिदौपचारिकत्वमवश्याश्रयणीयमिति चावधारिते **स्मृतिशब्देन** प्रत्यक्षज्ञानस्योपचारेऽतिशयासिद्धेः दर्शनशब्देन तु स्मृतेरुपचारे प्रत्यक्षसमानाकारतारूपवैशद्यातिशय (लक्षणविशेष) सिद्धेश्च दर्शनशब्देन विशदतमाध्रुवानुस्मृति(रेवेति) विवक्षितेत्यङ्गीक्रियते, **अतोऽत्रापि** निदिध्यासितव्य इति ध्रुवानुस्मृतिविधानात् द्रष्टव्य इत्येतदपि तद्विशेषसमर्पकमिति. **तेन** "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः", "तस्मिन्दृष्टे परावरे" इत्यत्रच्छागपशुन्यायनिर्णीतोऽर्थः एकस्मिन्नपि

वाक्ये निदिध्यासितव्यो द्रष्टव्य इत्यनयोरप्याश्रीयत इति न विरोधः; न च तव्यप्रत्ययद्वयविरोधः, "अग्नये पथिकृते" इत्यादिषु एक(विषय)विधेयत्वे चतुर्थी द्वयवदविरोधात्. एवं स्थिते यदि वाक्यार्थज्ञानस्य मोक्षोपायता तदोपासनादिविधिनैरर्थक्यप्रसङ्गपरिहरम्, शब्दजन्यप्रत्यक्षवादस्तु परिहरिष्यते. यत्तु वाक्यार्थज्ञानोत्पत्तौ प्रतिबन्धकभेदवासना निरासद्वारेण श्रवणमननिदिध्यासनानामुपकारकत्वमुक्तम्, तदपि हास्यम्, वाक्यस्याकाङ्क्षायोग्यतासन्निधिपरामर्शमन्तरेणापेक्षणीयान्तराभावात्, सत्यान्तु सामग्र्यां (वाक्यार्थ)ज्ञानानुत्पत्त्यनुपपत्तेः, न च प्रतिबन्धकमपि सामग्र्यैकदेशपर्यवसितम्, (अतस्तस्मिन्सत्येव सामग्रीपूर्तिरिति वाच्यम्,) यथाहुः, "प्रतिबन्धोऽपि(वि)सामग्री तद्धेतु(:) प्रतिबन्धकः।" इति, विपरीतवासनायाः प्रतिबन्धकत्वस्यैवासिद्धेः, सत्यामपि विपरीतसर्पादिवासनायामाप्तोपदेशलिङ्गादिभिः सर्पादिबाधकतत्त्वज्ञानमुत्पद्यते, अतएवासम्भावनाविपरीतसम्भावनाख्यचित्तविक्षेपद्वारा भेदवासनायाः प्रतिबन्धकत्वमित्येतदपि निरस्तम्, यदि च भेदवासनानिरसनद्वारेणाद्वैतवाक्यार्थज्ञानोत्पत्तिरिष्यते, तदा न कदाचिदपि तदुत्पत्तिर्भविष्यति,

उक्तं हि, "यावच्छरीरपातं हि किञ्च वर्तेत वासना। तन्निवृत्तौ कथम्पुंसामुन्मीलन निमीलने॥" इति. किञ्चानादिकालोपचितानां पटुतरप्रत्ययाभ्यामाद्दरैर्दृढतरनिरू-

ढानामपरिमितानामभेदवासनानामङ्कुरितिपयकालसाध्याविद्यद्भत्ययादिमूलाल्पीयस्समाद्वैतवासनया निरसितुमशक्यत्वात्, किञ्च तत्त्वज्ञाने सति तद्विषयभावनया तद्विपरीतवासनानिरास, तन्निरासे च तत्त्वज्ञानमिति मिथस्संश्रयस्स्यात्,

तद्याहुः "उत्पन्ने सति विज्ञाने वासना तु निरस्यते । निरस्तवासनस्यैव विज्ञानमिति दुर्भणम् ॥" इति, अनुत्पन्न एव तत्त्वज्ञाने श्रवणमनननिदिध्यासनैः क्रमात्तन्निरास इति चेत्, किन्तानि तत्त्वगोचराणि, उता तत्त्वगोचराणि, पूर्वंच विपरीतवासनायां सत्यान्तेषामप्यनुत्पत्तिरेव, उत्तरत्रातत्त्ववासनया कथन्तत्त्वज्ञानोत्पत्तिप्रतिबन्धकवासनानिरासः, तथाच "धागरङ्गनुकामस्य हिमवद्गमनोपमम् ।" इति न्यायः, किञ्चाभेदज्ञाने सिद्धे भेदवासनानिरासस्य किमर्थमपेक्षा, तदसिद्धौ तु तत्प्रतिपक्षवासनानिरासाभिलाषानुत्थानम्, न ह्यभेदज्ञानप्रतीतिरभेदप्रतीतिमन्तरेण स्यात्, न च प्रतीतौ तु वैशद्यावैशद्यादिवैषम्यन्त्वया वक्तुं शक्यम्, अभेदस्य ब्रह्मस्वरूपायमाणस्य सर्वदैकरूपत्वात्, विशेषपक्षे च भेदप्रतीतिप्रसङ्गात्, न च व्यावहारिकभेदोऽप्यास्तीति वाच्यम्, भेदवासनानिरासद्वारेणाभेदग्रहस्य परमार्थविषयत्वात्, अतो न भेदवासनानिरासद्वारेण श्रवणादिचयस्य दर्शनोपकारकत्वमिति. यत्पुनरुक्तम्, "ब्रह्मवेद ब्रह्मैव भवति" इत्यादौ ज्ञानमात्रस्यैव मोक्षहेतुत्वं श्रूयते, न हि प्रतिपन्नेऽर्थे

नास्तिकलक्षणम्, अतएवोच्यते "नैषातर्केणमतिरपनेया" *इति, तदयुक्तम्, सामान्यशब्दानां विशेषे पर्यवसानस्य* पञ्चधिकरण्यादिन्यायसिद्धत्वात्, न्यायानपेक्षं च तत्त्वनिर्णये किं शारीरकशास्त्रेणापि, ध्यानोपासनशब्दयोश्च ज्ञानविशेष-*विषयतया ज्ञानसामान्यविषयवेदनादिशब्दानान्तन्निर्विशे-*षशब्दार्थ एव पर्यवसानं युक्तम्, विकल्पसमुच्चयफलान्तरार्थ-त्वाद्यसम्भवस्योक्तत्वात्,

तदुक्तम् "अष्टदोषाविकल्पेस्तुर्गौरवञ्च व्यवस्थितौ । समु-च्चयेऽनपेक्षा स्यादङ्गाङ्गित्वं न सीयते॥" इति, तथा विद्यु-पास्त्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनाच्च तयोरैकार्थ्यं सिद्धम्, "मनोब्रह्मेत्युपासीत" इति विहितमेव ह्युपासनम् "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद" इति फलविधानार्थमनूद्यते, न ह्यफलं विधायान्यत्फल-मनुवदितुं युक्तम्, एवम् "यस्तद्वेद यत्स वेद" इति वेदन-शब्दमात्रश्रावी आनश्रुतिः तदर्थं "यान्देवतामुपास्से" इत्यु-पासिनानुवदति, एवमन्यत्रापि, तथा "तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ।" "नाहं वेदैर्न तपसा" इत्यादिश्रुतिस्मृत्योर्वेदनभक्तिशब्दाभ्यां मोक्षोपायम-भिधाय तदपरोपायनिषेधपरयोः परस्परार्थप्रतिक्षेपानुप-*पत्तेः वेदनशब्देनापि तैलधारावदविच्छिन्नभक्तिरूपज्ञान* विशेष एव विवक्षित इति स्वीकर्तव्यम्, एवन्ध्यानोपासन भक्तिशब्दसमानार्थतया वेदनादिशब्दानां विशेषविषयत्वे

निश्चिते सति सामान्यमात्राश्रयणे न्यायानभिज्ञतानिबन्धनम्,

आह च, "पयोम्भोभागत्वनिर्णीतौ निपुणान्वयपूर्वकम् । गर्दभादिषु तुल्यत्वन्दर्भप्रायकल्पितम् ॥" इति . यत्पुनर्वाक्यतस्सिद्धस्यैव ज्ञानस्य विधेयत्वन्न सम्भवतीति, तदस्माकमिष्टमेव, ततोऽन्यस्यैव विधानोपपादनात् , प्रत्यक्षविरुद्धश्चायमविधेयज्ञानाधीनमोक्षवादः, वाक्यार्थज्ञानमात्रेणाविद्यानिवृत्त्यदर्शनात्,

आह च, "तत्त्वमस्यादिवाक्यस्य श्रतश्रवणेऽपि हि । दृश्यते त्वमहम्पूर्वो विवादो ब्रह्मवादिनाम् ॥" इति , ननु येषां वाक्यार्थज्ञानञ्जातन्तेषान्तन्निवृत्तिरस्त्येव, येषान्तु सा नास्ति तेषान्तदपि न जातमित्यविरोध इति चेत् तन्न, तज्ज्ञानाभावे तत्प्रवचनाद्यसम्भवात्, तदसम्भवे च शिष्याणां श्रवणादेरप्यसिद्धिप्रसङ्गात्, **एवमाचार्यस्यापि**, अथ वाक्यार्थज्ञानेन निवृत्ताविद्या एवाविद्यावतां श्रावका इति चेन्न, तेषां श्रावकत्वादिव्यापारस्य त(त्का)त्करणशरीरेन्द्रियादेस्तत्प्रयोजनस्य च ख्यातिलाभपूजापरानुग्रहादेस्तत्प्रतिभासस्य चाविद्यामन्तरेणासम्भवात् ; अविद्यानिवृत्तावपि बाधितानुवृत्त्या भेदप्रतिभासात् प्रत्यक्षाद्यविरोधः प्रवचनाद्युपपत्तिश्चेति चेत्तन्न, **भवत्पक्षे** बाधितानुवृत्त्यसम्भवस्य वक्ष्यमाणत्वात्, तथाप्यविशदप्रतिपत्तिभासात् **अविद्या** विशेषवशादेव वा प्रवचनाद्युपपत्तिरिति चेन्न, **विशदप्र-**

तीति परामर्शरूपप्रत्यक्षसिद्धान्तयोर्विरोधात्, विशदाध्यवसितसमस्ततत्त्वार्थाश्च वासुदेवादयोऽर्जुनादिभ्य उपदिशन्तीति हि स्वीकृतं युष्माभिः ; न चाद्वैतसिद्धान्तश्रावकास्स्वात्मनाऽत्यन्तानभिज्ञतामनुमन्यन्ते, तथा सत्यविवादश्च. किञ्च प्रतिवादिनो वा प्रबलाविद्याः कथमभवत्पक्षम्प्रतिक्षिपन्ति, न तावदविदित्वैव, निराश्रयवादायोगात्, विदित्वा चेत्कथन्तर्हि प्रतिवादिनाविदिते भवत्पक्षे भवतां ज्ञानानुत्पत्तिः, न हि स्वोक्तम्परे जानन्ति वयन्तु न विद्म इति स्वस्थैरभिधेयम्, यत्तदविद्यानिवर्तकं विशदमद्वैतज्ञानमुदेष्यति, यच्चेदानीं श्रवणादविशदमुत्पन्नम्, तदुभयम्भिन्नविषयमेकविषयं वा, भिन्नविषयत्वे तस्यान्यसिद्धान्तज्ञानवत् तदनुपकारकत्वम् ; एकविषयत्वेऽप्यन्यूनानतिरिक्तविषयं वा प्रकारविशेषविशेषितविषयं वा, आद्ये पश्चात्तनस्याप्यनिवर्तकत्वम् इदानीन्तनस्यैव वा निवर्तकत्वं स्यात्, अविशेषात् ; द्वितीये ब्रह्मणस्सविशेषत्वं स्यात्, सविशेषमिदानीङ्गृहीतम्, पश्चात्तु निर्विशेषम्प्रकाशिष्यत इति वैषम्यमिति चेत्, कथमिदं त्वयावगतम्, श्रुतेरिति चेत्, तर्हि श्रुतेरेव निर्विशेषज्ञानमिदानीमेव जातमिति कः पश्चात्तनस्य विशेषः, ज्ञानमिदानीञ्जातं, व्यवसायस्तु पश्चाद्भविष्यतीति विशेष इति चेन्न, वेदप्रामाण्यनिश्चये तदानीमेव व्यवसायोदयात्, तदनिश्चये तु पश्चादपि तदसिद्धिः, प्रमाणत्वाभ्युपगमेवातदर्थविशेषे सन्देह

इति चेत्, तर्हि विशदप्रवचनप्रवीणेभ्य आचार्येभ्यो न्याय पूर्वन्द्विस्त्रिश्शतशो वा श्रोतव्यं न पुनश्श्रवणदशायामेव सन्दिहानेन भवता पश्चादनवरतध्यानेनापि ज्ञातुं शक्यम्, मननवद्वाक्यार्थसन्देह निराकरणाय पश्चात्तनं ज्ञानमिति चेन्न, मननेनैव सञ्चालितनिष्कम्पत्वे पुनरन्यानवकाशात्, अन्यथातिप्रसङ्गात्, अस्तु तर्हि पारोक्ष्यापारोक्ष्यलक्षणं वैषम्यमिति चेत्, विषयातिरेकाभावेनैव प्रागुक्तेन तद्सिद्धेः, सिद्धावपि बाधकत्वाबाधकत्वयोरकिञ्चित्करत्वात्, परोक्षेणापि शास्त्रानुमानजन्यज्ञानेनापरोक्षभ्रमबाधस्याभ्युपगमात्, प्रत्यक्षेणापि देहात्मभ्रमादिना शास्त्रबाधानभ्युपगमाच्च; एवम् उत्पन्ना भ्रान्तिरनित्यत्वात्स्वयमेव निवर्तते, भ्रान्त्यनुवृत्तिनिवृत्तिस्तु कारणानुवृत्तिनिवृत्त्या भवति, तदनुवृत्तौ तु बाधकस्य प्रत्यक्षत्वेऽपि भ्रान्त्यनुवृत्तिर्भवत्येव, चन्द्रैकत्वे प्रत्यक्षेऽप्यङ्गुल्यवष्टम्भादिना भ्रान्त्यनुवृत्तिवत्, वाक्यजन्यज्ञानमपरोक्षमिति च सर्वलोकविरुद्धम्, पृथक्चैतत्प्रपञ्चयिष्यामः. तदेतदखिलम्मुखान्तरेण प्रपञ्चितम्भाष्ये "न तावद्वाक्यार्थज्ञानम्" इत्यादिना विस्तरेण.

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु शतदूषण्याम्
अविधेयज्ञानवादभङ्गश्चतुर्थः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

## शतदूषण्याम्

## बाधितानुवृत्तिभङ्गवादः पञ्चमः ।

नानुवर्त्तेत संसारो यत्प्रसादैकबाधितः ।
प्रसीदतु स मे देवः प्रथमाञ्जलि किङ्करः ॥

यदुच्यते, तत्त्वमस्यादिवाक्यात्तत्त्वज्ञाने जातेऽपि ब्रह्मविदाम्बाधितानुवृत्त्या भेदप्रतिभासादेराशरीरमनुवृत्तिः, तदनुवृत्तावपि छिन्नमूलतया दग्धपटादिवदबन्धकत्वञ्चेति, तत्र पृच्छामः, बाधितत्वे कथमनुवृत्तिर्भवता वक्तव्या, तस्यां वा तत्कथम्, प्रमाणबलान्मिथ्यात्वाध्यवसायेऽपि द्विचन्द्रादिष्विव दोषमहिम्ना प्रतिभासानुवृत्तिरिति न विरोध इति चेत्, समस्तद्वैतकुक्षिम्भरिणाद्वैतविज्ञानेनाबाधितः कोऽसौ दोषः, अविद्यैवेति चेत्, कथन्तर्ह्यविद्यानिवृत्तिः, न हि तन्निवृत्तावपर्यवसितः कश्चिद्बाधो नाम, तन्निवृत्तावपि तन्मूलवासनास्तीति चेत्, सा किम्ब्रह्मवत्सत्यत्वात्तत्त्वज्ञानेनाबाधिता, उत मिथ्यात्वेऽपि तदविषयत्वात्, न प्रथमः, द्वैतापसिद्धान्तादिदोषप्रसङ्गात्, न च सा ब्रह्मस्वरूपानुप्रवेशिनी, भेदप्रतिभासानुवृत्तेरनिर्मोक्षप्रसङ्गात्, ब्रह्मणस्सावयवत्वादि(दोष)प्रसङ्गाच्च, न चासत्याविद्योपात्ता वासना सत्येति सम्पद्यते, न चोपादान-

ध्वंसे कार्यानुवृत्तिमुन्मत्तोऽप्यनुमन्यते, नापि द्वितीयः, वासनाया अपि श्रवणसमयसमधिगतब्रह्मव्यतिरेकलक्षणैकोपाधि क्रोडीकारात्, अन्यथा त्वविद्याया अपि बाधकज्ञानाविषयत्वप्रसङ्गात्, "नेह नानास्ति" इत्यादेरविशेषात् तद्विषयत्वमिति चेत् तुल्यम्, यदि च वाक्यार्थज्ञानाद्वासना न निवर्तते, कुतस्तर्हि तन्निवृत्तिः, न तावददृष्टादेः, तथा सति ज्ञानबाध्यत्वाभावेन सत्यत्वप्रसङ्गात्, अतएव न स्वतः, व्याघाताच्च, न हि वध्यघातकयोस्तादात्म्यन्दृष्टम्, **न च सहकार्यन्तरमन्त**रेण घटादिष्वपि स्वप्रध्वंसहेतुता, **अहेतुक**विनाशवादे तु सौगत चार्वाकादिसौहार्दोद्गारप्रसङ्गः, **अविद्यायाश्च** तद्देवाहेतुकनिवृत्त्यविरोधस्स्यात्, **न च** दावदहनान्त्यशब्दचरमसंस्कारादिवदिति वाच्यम्, **तथापि** तत्तदवस्थान्तरकालविशेषादिसामग्रीसहितपरमेश्वरसङ्कल्परूपस्य कारणस्यास्माभिरभ्युपगमात्, **द्विचन्द्रादौ** तु अङ्गुल्यवष्टम्भतिमिरादिदोषस्य चन्द्रैकत्वज्ञानाविषयत्वात्, **तदुभय**विषयैकज्ञानोदयेऽपि पार्श्वस्थतारकाप्रकाशस्येव दोषप्रकाशांशस्य चन्द्रैकत्वप्रकाशेन विरोधाभावात्, **दोषो मिथ्येति** तु ज्ञानस्य लौकिकानामनुदयात्, **यौक्तिक**(तन्मि)मिथ्यात्वज्ञानस्यैव भ्रान्तित्वेन तत्सत्यत्वाद्यबाध इति तन्मूलभ्रमपरम्परानुवृत्तिर्घटते, तद्विषयान्यथात्वस्वभावेन भयविस्मयादिकार्यनिवृत्तिश्च, तव तु न तथा, **कारणभूताविद्यावत्कार्यभूत**शोकादिवच्च मध्यगतवासनाभेदज्ञानयोरप्येकहेलयैव निवार्य-

